तलिंगं तत्प्रणमामि० ॥ ३ ॥ कनकमहामणिभूषितलिंगं फणिपति-

वेष्टितशोभितलिंगम् । दक्षसुयज्ञविनाशनलिंगं तत्प्र० ॥ ४ ॥ कुंकुम-
चन्दनलेपितलिंगं, पंकजहारसुशोभितलिंगम् सञ्चितपापविनाशन-
लिंगं तत्प्र० ॥ ५ ॥ देवगणार्चितसेवितलिंगं, भावैर्भक्तिभिरेव च
लिंगम् दिनकरकोटिप्रभाकरलिंगं, तत्प्रणमामि० ॥ ६ ॥ अष्ट-
दलोपरिवेष्टितलिंगं, सर्वसमुद्भवकारणलिंगम् । अष्टदरिद्रविना-
शितलिंगं तत्प्र० ॥ ७ ॥ सुरगुरुसुरवरपूजितलिंगं, सुरवनपुष्पसदा-
र्चितलिंगम् । परात्परं परमात्मजलिंगं, तत्प्र० ॥ ८ ॥ लिंगाष्टकमिदं
पुण्यं यः पठेच्छिवसन्निधौ । शिवलोकमवाप्नोति शिवेन सह मोदते
॥ ९ ॥ इति लिंगाष्टकम् ॥ प्रणम्य ॥ ततः पार्थिवपूजापक्षे ॥ पार्थि-
वलिंगं किंचिच्चालयेत् ॥ ततो दक्षिणासंकल्पः । अद्येहाऽमुकोहं श्रुति-
स्मृतिपुराणोक्तफलावाप्तये अमुककामनया अमुकव्रतांगत्वेन अमुक
शिवलिङ्गोपरि श्रीसदाशिवस्य पूजनकर्म्मणः सांगफलप्राप्त्यर्थंन्यूना
तिरिक्तपरिपूर्णतासिद्ध्यर्थं इदं सुवर्णं सुवर्णनिष्क्रयीभूतं द्रव्यं वा

ब्राह्मणाय वा ब्राह्मणेभ्यो विभज्यदासये ॐ तत्सन्नमम ॥ ब्राह्मणाय
अर्घ्यं दत्वा ॥ भूमिदेवाग्रजन्मासि त्वं विप्र पुरुषोत्तम । प्रत्यक्षोयज्ञ-
० पुरुषश्चार्घ्योयं प्रतिगृह्यताम् । गन्धविलेपनम् ॥ नमो ब्रह्मण्यदेवाय १०
३॥ गोब्राह्मणहिताय च जगद्धिताय कृष्णाय गोविन्दाय नमोनमः इति-
पूजयेत् ॥ पुनः अर्घ्यं दत्वा अर्चनं विधेः सर्वं परिपूर्णतास्तु अस्तु
परिपूर्णम् ॥ दक्षिणांदत्वा । अभिषेकतिलकमंत्रपाठादि कारयित्वा
विसर्जनम् संपूज्यशैलेन्द्रसुतासमन्वितं मृत्युञ्जयं चन्द्रकलावतंसम् ।
प्रशोभितंचारुमृगेन्द्रचर्म्मणानमः शिवायेति विसर्जयामि ॥ आवाहनं
न जानामिदजानामि विसर्जनम् । पूजांचैव नजानामि क्षमस्व पर-
मेश्वर । मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितोमया देव
परिपूर्णं तदस्तु मे ॥ ॐ ह्रौं ह्रीं जूँ सः नमः शिवाय ॥ पार्थिवपू- ॥२३॥
जापक्षे ॥ एकं पार्थिवलिंगमुद्धृत्य तत्रैवोत्तरस्यां दिशि जले विस-
र्जयेत ॥ ॐ ह्रौं ह्रीं जूँ सः नमः शिवाय ॥ शिव कैलाश गच्छ ॥

जयेत ॥ ॐ ह्रौं ह्रीं जूँ सः नमः शिवाय ॥ शिव कैलासं गच्छ ॥

ॐ गच्छ गच्छसुरश्रेष्ठस्वस्थानेपरमेश्वरयत्र ब्रह्मादयोदेवास्तत्र गच्छ सुरेश्वर ॥ ॐ हरहरहर महादेव ॥ जलं गृहीत्वा ॥ ॐ कायेन वाचा-मनसेन्द्रियैर्वा, बुद्ध्यात्मना वानुसृतः स्वभावात् । करोमि यद्यत्सकलं परस्मै, नमः शिवायेति समर्प्पयामि ॥ कवचम् ॥ प्रणम्यमृत्युञ्जयमा-दिदेवं, सुरैर्वृतं सद्गुरुसंगलभ्यम् । ध्यात्वा ततस्तं निजरक्षणार्थं संधारयेतन्मयशैववर्म ॥ मृत्युञ्जयं तुहिनशैलसितं भुजंगैः, सम्भूषितं रविसुधांशुकृशानुनेत्रम् । शार्दूलचर्मवसनं मृगमक्षमालां, संचिन्तये-दमृतकुम्भयुगं दधानम् ॥ मृत्युञ्जयः पातु ममोत्तमांगं, भालं सदा रक्षतु विश्वमूर्तिः कैलासनाथोवतु चक्षुषी मे, कर्णौ ममाव्यात्त्रि-पुरान्तकारी ॥ घ्राणं सदा रक्षत मे महेशः, पायान्मुखं पञ्चमुखः सदामे । विष्णुप्रियो रक्षतु मे रसज्ञां, कण्ठं सदा भृंगिरिटिप्रभुर्मे ॥ स्कन्धौ कपाली सततं ममाव्यात्, त्रिलोचनः पातु भुजद्वयं मे । करौ सदा रक्षतु चन्द्रमौलिस्त्रैलोक्यनाथः सततं ममाव्यात् ॥ यक्षे-

शमित्रो मम पातुमध्यंनाभिंतुषाराद्रिसुतापतिर्मे । सदाशिवोरक्षतु
पृष्ठभागं कटिंसदापातुकुठारपाणिः ॥ चन्द्रार्कनेत्रोवतु सक्थिनी मे
 गंगाधरः पातु ममोरुयुग्गम् । पंचाननोरक्षतुजानुनीमे, जंघेममा- 
॥२४॥ व्यात्फणिभूषितांगः ॥ इशः सदारक्षतुमेंघ्रियुग्मंविश्वेश्वरोव्यातसक-
लंवपुर्मे सर्वत्र मां रक्षतु सर्वकाले, मृत्युञ्जयाख्यो जगतामधीशः ।
मृत्युञ्जयस्यास्य हरेः सुवर्णमः, संधारणात्सिद्धिमवाप्स्यसित्वम् ।
गृहाश्रमे संचरतो हि विघ्ना नश्यन्ति सर्वे कवचानुभावात् ॥ इदं
पठेद्यः सततं सुभक्त्या, भवेच्चिरायुःस सुखी सुतान्वितः । स्नेहादि-
पापैः सनरोनलिप्यते, देहावसानेप्रविशेत्परात्मनि अव्याहताज्ञः प्रभ-
वेदिह क्षितौ, लक्ष्मीर्भवेत्तद्भवने सुनिश्चला । द्रष्टुं न शक्तास्त्रिजग-
त्सुचारिणः संरक्षितं नाम महेशनामभिः ॥ ग्रामान्तरं यः कवचं ॥२४॥
पठित्वा, संयाति कार्य्यं प्रविधाय सम्यक् । आयाति मर्त्यः सुसुखेन

मन्दिरं, शीघ्रं स्मरारेः कवचानुभावात् इतिशिवकवचम् ॥ अथद्वा-

दशज्योतिर्लिङ्गानि । सौराष्ट्रेसोमनाथं च श्रीशैलेमल्लिकार्जुनम् ।
उज्जयिन्यां महाकालमोंकारममलेश्वरम् ॥ १ ॥ पर्यल्यां वैद्यनाथं च
डाकिन्यां भीमशंकरम् ॥ २ ॥ वाराणस्यां तु विश्वेश त्र्यम्बकं गौत
मीतटे । हिमालये तु केदारं घुमृणेश शिवालये ॥ एतानि ज्यो त
लिङ्गानि सायं प्रातः पठेन्नरः । सप्तजन्मकृतं पापं स्मरणेन विनश्यति
॥ ४ ॥ इति । अथशिवमानसपूजनम् रत्नैः कल्पितमासनं हिमजलैः
स्नानं च दिव्याम्बरं, नानारत्नविभूषितंमृगमदामोदाङ्कितं चन्दनम् ।
जातीचम्पकविल्वपत्ररचितं पुष्पं च धूपं तथा, दीपं देव दयानिधे
पशुपते हृतकल्पितं गृह्यताम् । १ ॥ सौवर्णे मणिखण्डरत्नरचिते
पात्रेघृतंपायसं, भक्ष्यंपञ्चविधंपयोदधियुतं रम्भाफलं पायसम् ।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वल, ताम्बूलं मनसा
मया विरचितं भक्त्या प्रभो स्वीकुरु ॥२॥ छात्रंचामरयोर्युगं व्यजनकं
चादर्शकं निर्मलं, वीणाभेरिमृदङ्गकाहलकलागीतं च नृत्यं तथा ॥

साष्टाङ्ग प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया सङ्कल्पेन समर्पितं
तव विभो पूजां गृहाण प्रभो ॥ ३ ॥ आत्मा त्वं गिरिजा मतिः
शि० सहचराः प्राणाः शरीरं गृहं, पूजा ते विषयोपभोगरचना निद्रा प०
२५॥ समाधिस्थितिः । संचारः पदयाः प्रदक्षिणविधिः स्तोत्राणि सर्वा
गिरो, यद्यत्कर्म करोमि तत्तदखिलंशम्भो तावाराधनम् ॥ ४ ॥ कर-
चरणकृतं वा कायजं कर्मजं वा, श्रवणनयनजं वा मानसं वापराधम् ।
विहितं अविहितं वा सर्वमेतत्क्षमस्व, जय जय करुणाब्धे श्री महादेव
शम्भो ॥ ५ ॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्
सदावसन्तं हृदयारविन्दे भवं भवानी सहितं नमामि ॥ ६ । शिवः
पृथ्वी शिवो वारि शिवः सूर्य्यः शिवः शशी । शिवो वह्निः शिवो
वायुः शिवः खं ॐ शिवोऽस्म्यहम् अथ परापूजा ॥ पूर्णस्यावाहनं ॥२५॥
कुत्र सर्वाधारस्य चासनम् । स्वच्छस्यपाद्यमर्घ्यं च रम्यस्याभरणंकुतः ।
निर्लेपस्य ... नित्यतृप्तस्य नैवेद्यं

ताम्बूलं च कुतो विभोः ॥ २ ॥ प्रदक्षिणाह्यनन्तस्य ह्यद्वयस्य कुतो नति : अन्तर्वहिश्च पूर्णस्य कथामुद्वासनं भवेत् ॥ ३ ॥ स्वयंप्रकाशमानस्य कुतोनीराजनं भवेत् । वेदवाक्यैरवाद्यस्य कुतः स्तोत्रं विधीयते ॥ ४ ॥ एत्रमेव परापूजा सर्वावस्थांसु सर्वदा । एकबुद्धया तु देवेशे विधेया ब्रह्मवित्तमैः ॥ ५ ॥ श्रीशिवार्प्पणमस्तु ।

॥ समाप्तम् ॥



मुद्रक : अभय कुमार आर्यभूषण प्रेस, ब्रह्मनाल, वाराणसी-१

श्रीगणेशाय नमः॥ हरिः ॐ॥ गणानान्त्वाग
णपतिꣳ हवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳ
हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे व
सो मम॥ आहमजानि गर्ब्भधमा त्वमजासि
गर्ब्भधम्॥ १॥ गायत्री त्रिष्टुब्जगत्यनुष्टुप्प
ङ्क्त्या सह॥ बृहत्युष्णिहा ककुप्प्सूचीभिः
शम्म्यन्तु त्वा॥ २॥ द्विपदा याश्चतुष्प्पदास्त्रि

पदाया श्चषट्पदाः ॥ विच्छन्दाया श्चसच्छ
न्दाः सूचीभिः शम्म्यन्तुत्त्वा ॥ ३ ॥ सहस्तो
माः सहछन्दसऽआवृतः सहप्प्रमाऽऋषय
ः सप्तदैव्याः ॥ पूर्वेषाम्पन्थामनुदृश्यधी
राऽअन्वालेभिरेरत्थ्योनरश्म्मीन् ॥ ४ ॥
ॐ यज्जाग्ग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यत
थैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे

मनः शिवसङ्कल्पमस्तु॥५॥येनकर्म्माण्यप
सोमनीषिणोयज्ञेकृण्वन्तिव्विदथेषुधीराः ॥
यदपूर्व्वंयक्षमन्तःप्रजानान्तन्मेमनः
शिवसङ्कल्पमस्तु ॥६॥ यत्प्रज्ञानमुतचेतो
धृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु॥यस्म्मा
न्नऽऋतेकिञ्चनकर्म्मक्क्रियतेतन्मेमनः
शिवसङ्कल्पमस्तु ॥ ७॥ येनेदम्भूतम्भुवन

रुद्रा० म्भविष्यत्परिगृहीतममृतेनसर्व्वम् ॥ येनँ अ० १
१८ यज्ञस्तायतेसप्तहोतातन्मेमनः शिवसङ्क
ल्पमस्तु॥८॥यस्मिन्नृचःसामयजूꣳषियस्
स्मिन्प्रतिष्ठितारथनाभाविवाराः॥यस्मिँ
श्चित्तꣳसर्व्वमोतम्प्रजानान्तन्मेमनः शिव
सङ्कल्पमस्तु ॥९॥ सुषारथिरश्वानिवयन्म
नुष्यान्नेनीयतेभीशुभिर्व्वाजिनइव ॥ हृ ३

त्प्रतिष्ठंय्यदजिरञ्जविष्ठन्तन्मेमनः शिवसं

ङ्कल्पमस्तु॥ १० ॥ इति रुद्रे प्रथमोऽध्यायः॥

हरिः ॐ॥ सहस्रशीर्षापुरुषः सहस्राक्षः

सहस्रपात्॥ सभूमिꣳ सर्वतस्पृत्वात्यति

ष्ठद्दशाङ्गुलम्॥ १॥ पुरुषऽएवेदꣳ सर्वंय्यद्भू

तंय्यच्चभाव्यम्॥ उतामृतत्त्वस्येशानोयद

न्नेनातिरोहति॥ २॥ एतावानस्यमहिमा

ज्यायाँश्चपूरुषः॥पादोस्यव्विश्वाभूतानित्रि
पादस्यामृतन्दिवि॥३॥त्रिपादूर्ध्वऽउदैत्पुरु
षःपादोस्येहाभवत्पुनः॥ ततोव्विष्वङ्व्य
क्रामत्साशनानशनेऽअभि॥४॥ ततोव्विरा
डजायतव्विराजोऽअधिपूरुषः॥ सजातोअ
त्यरिच्यतपश्चाद्भूमिमथोपुरः॥५॥तस्माद्य
ज्ञात्सर्व्वहुतःसम्भृतम्पृषदाज्ज्यम्॥ पशूँस्ताँ

रुद्रा० श्चँक्रेवायव्व्यानारण्याग्ग्राम्म्याश्चये ॥ ६ ॥ तँ अ०

४१ स्माद्यज्ञात्सर्व्वहुतऽऋचः सामानिजज्ञिरे ॥

छन्दाᳬसिजज्ञिरेतस्माद्यजुस्तस्म्मादजा

यत ॥ ७ ॥ तस्म्मादश्श्वाऽअजायन्तयेकेचोभ

यादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽ

अजावयः ॥ ८ ॥ तंय्यज्ञम्बर्हिषिप्प्रौक्षन्पु

रुषञ्जातमग्ग्रतः ॥ तेनदेवाऽअयजन्तसा ४१

द्ध्याऽऋषयश्च्चये ॥ ९ ॥ यत्पुरुषंव्यदधुःक
तिधाव्व्यकल्पयन् ॥ मुखङ्किमस्यासीत्कि
म्बाहूकिमूरूपादाऽउच्च्येते ॥ १० ॥ ब्राह्मणो
स्यमुखमासीद्बाहूराजन्न्यः कृतः ॥ ऊरूतद
स्यसद्वैश्यः पद्भ्यांꣳशूद्रोऽअजायत ॥ ११ ॥
चन्द्रमामनसोजातश्चक्षोःसूर्य्योऽअजाय
त ॥ श्रोत्राद्वायुश्चप्प्राणश्चमुखादग्निरजा

यत ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षꣳशी
र्ष्णोद्यौःसमवर्त्तत ॥ पद्भ्याम्भूमिर्द्दिशःश्रो
त्रात्तथालोकाँ२ऽअकल्पयन् ॥ १३ ॥ यत्पु
रुषेणहविषादेवायज्ञमतन्वत ॥ वसन्तोऽ
स्यासीदाज्यङ्ग्रीष्मऽइध्मःशरद्धविः ॥ १४ ॥
सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृ
ताः ॥ देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्प

शुम् ॥ १५ ॥ यज्ञेनयज्ञमयजन्तदेवास्तानि
धर्म्माणिप्रथमान्यासन् ॥ तेहनाकम्महि
मानःसचन्तयत्रपूर्व्वेसाद्ध्याःसन्तिदेवाः
॥ १६ ॥ अद्भ्यःसम्भृतःपृथिव्यैरसाच्चविश्व
कर्म्मणःसमवर्त्तताग्ग्रे ॥ तस्यत्त्वष्टाविदधद्रू
पमेतितन्मर्त्यस्यदेवत्वमाजानमग्ग्रे ।१७।
वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तम

सꣳपरस्तात् ॥ तमेवविद्वित्वातिमृत्युमेति
नान्यꣳपन्थाविद्यतेयनाय ॥ १८ ॥ प्रजाप
तिश्चरतिगर्भेऽअन्तरजायमानोबहुधावि
जायते ॥ तस्ययोनिम्परिपश्यन्तिधीरास्त
स्मिन्हतस्थुर्भुवनानिविश्वा ॥१९॥ योदे
वेभ्यऽआतपतियोदेवानाम्पुरोहितꣳ ॥ पू
र्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये २०

रुचम्ब्राह्मञ्जनयन्तोदेवाऽअग्ग्रेतदब्रुवन् 
यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशे
॥२१॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपा
र्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्
न्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण
॥२२॥ इति रुद्रे द्वितीयोऽध्यायः ॥२॥
हरिः ॐ॥ आशुःशिशानोवृषभोनभीमोघ 

 

नाघनः क्षोभंणश्चर्षणीनाम् ॥ सुङ्कन्दंनोनि
मिषऽएंकवीरः शुतꣳसेनांऽअजयत्त्साक
मिन्द्रंः ॥१॥ सुङ्कन्दंनेनानिमिषेणंजिष्णुना
युत्कारेणंदुश्च्यवनेनंधृष्णुनां ॥ तदिन्द्रेंणज
यतुतत्त्संहद्ध्वं युधोंनरऽइषुंहस्तेनवृष्णा २
सऽइषुंहस्तैः सनिषङ्गिभिर्व्वशीसꣳस्त्रंष्टास
युधऽइन्द्रोंगुणेनं ॥ सꣳसृष्ट्जित्त्सोंमुपाबा

हुशद्धर्युग्ग्रधन्वाप्प्रतिंहिताभिरस्ता ॥३॥ बृ
हस्प्पतेपरिंदीयारथेनरक्षोहामित्राँ २ऽअप
बाधमानः ॥ प्प्रभुञ्जन्त्सेनाःप्प्रमृणोयुधा
जयन्नस्म्माकमेद्ध्यवितारथानाम् ॥४॥ बल
विज्ञायस्त्थविरःप्प्रवीरःसहस्वान्वाजीसह
मानऽउग्ग्रः ॥ अभिवीरोऽअभिसत्त्वासहो
जाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥५॥ गोत्र

दश॰ भिंदङ्गोविदंव्वज्ज्रंबाहुञ्जयन्तमज्ज्मंप्प्रमृण प॰
४६ न्तमोजंसा॥इमꣳसंजाताऽअनुंवीरयद्ध्वमि २
न्द्रꣳसखायोऽअनुसꣳरंभद्ध्वम्॥ ६ ॥ अभि
गोत्राणिसहंसागाहंमानोदयोव्वीरःशतमं
न्युरिन्द्रं÷। दुश्च्यवनःपृंतनाषाडंयुद्ध्यो
स्म्माकꣳसेनाऽअवतुप्प्रयुत्सु॥७॥ इन्द्रंऽ
आसान्नेताबृहस्प्पतिर्द्दक्षिणायज्ञःपुरऽएतु ४६

ह्यंसᳪशिते ॥ गच्छामित्रान्प्रपद्यस्वमामी
षाङ्कञ्चनोच्छिषᳪ ॥१३॥ प्रेताजयतानरऽइ
न्द्रोवᳪशर्म्मयच्छतु ॥ उग्ग्रावंᳫसन्तुबाह
वोनाधृष्ष्यायथासथ ॥ १४ ॥ असौयासेना
मरुतᳪपरेषामभ्यैतिनऽओजसास्पर्द्धमा
ना ॥ ताङ्गूहततमसापव्व्रतेनयथामीऽअन्न्यो
ऽअन्न्यन्नजानन् ॥ १५ ॥ यत्रबाणाᳪसम्प

रुद्रा०
५२

तन्तिकुमारांग्निंशिखाँऽइंव॥तन्नुऽइन्द्रोबृह
स्पतिरदितिःशर्म्मयच्छतुविश्वाहाशर्म्म
यच्छतु॥१६॥ मर्म्माणितेव्वर्म्मणाच्छादया
मिसोमंस्त्वाराजामृतेनानुंवस्ताम् ॥ उरोर्व्व
रीयोव्वरुंणस्तेकृणोतुजयंन्तन्त्वानुंदेवामंद
न्तु॥१७॥ इतिरुद्रे तृतीयोऽध्याय ॥३॥
हरिःॐ॥ व्विभ्राड्बृहत्पिबतुसोम्यम्मध्वा

प०
३
५२

युहं धेद्युज्ञपतावविं-हुतम् ॥ भ्रातेजूतोसोऽ म० ४

अभिरक्षतित्त्मनांप्रजाः पुंपोषपुरुधाविरा

जति ॥१॥ उदुत्त्यञ्जातवेदसन्देवंवहन्तिके

तवः ॥दृशेविश्वायसूर्य्यम् ॥२॥ येनापावक

चक्षसाभुरण्यन्तञ्जनाँ२ऽअनु ॥ त्वंवरुणप

श्यसि ॥३॥ दैव्यावद्ध्वर्यूऽआगतꣳरथेन

सूर्य्यत्वचा ॥ मद्ध्वायज्ञꣳसमञ्जाथे ॥ तम्प्र ५४

त्थाऽयंव्वेनश्चित्रन्देवानाम् ॥ ४ ॥ तम्प्र
त्नथापूर्व्वथाव्विश्वथेमथाज्ज्येष्ठतातिम्बर्हिष
दᳫँस्वर्व्विदम् ॥ प्रतीचीनंव्वृजनन्दोहसेधुनिं
माशुञ्जयन्तमनुयासुवर्द्धसे ॥ ५ ॥ अयंव्वेन
श्चोदयत्पृश्निगर्भाज्ज्योतिर्ज्जरायूरजसो
व्विमाने ॥ इममपाᳫँसङ्गमेसूर्य्यस्यशिशुन्न
व्विप्प्रामतिभीरिहन्ति ॥ ६ ॥ चित्रन्देवानाम्

रुद्रा० दगादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्नेः॥आ च०
५६ प्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्य्यऽआ ४
त्माजगतस्तस्थुषश्च॥ ७ ॥ आनऽइडाभि
र्व्विदथेसुशस्तिव्विश्वानरꣳसवितादेवऽएतु ॥
अपियथायुवानोमत्सथानोव्विश्वञ्जगदभि
पित्वेमनीषा॥ ८ ॥ यदद्यकच्चवृत्रहन्नुदगाऽ
अभिसूर्य्य॥ सर्व्वन्तदिन्द्रतेव्वशे॥ ९ ॥ तरणि ५६

ब्रा० र्व्विश्वदर्शतोऽज्योतिष्कृदसिसूर्य्यं॥व्विश्वमा प०
५७ भासिरोचनम्॥ १० ॥ तत्सूर्य्यस्यदेवत्वन्त ४
न्महित्वम्मद्ध्याकर्त्तोर्व्विततꣳसञ्जभार ॥
यदेदयुक्तहरितःसधस्थादाद्रात्रीव्वासस्त
नुतेसिमस्मै ॥ ११ ॥ तन्मित्रस्यव्वरुणस्या
५८ भिचक्षेसूर्य्योरूपङ्कृणुतेद्योरुपस्थे ॥ अन
२१० न्तमन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितꣳ १०

सम्भरन्ति॥१२॥ बण्महाँ२ऽअसिसूर्य्यबडा
दित्यमहाँ२ऽअसि॥ महस्तैसतोमहिमापं
नस्यतेद्धादेवमहाँ२ऽअसि॥१३॥ बट्सूर्य्य
श्रवसामहाँ२ऽअसिसत्रादेवमहाँ२ऽअसि॥
मह्नादेवानामसुर्य्यः पुरोहितोविभुज्यो
तिरदाभ्यम्॥१४॥ श्रायन्तऽइवसूर्य्यंवि
श्वेदिन्द्रस्यभक्षत॥ वसूनिजातेजनमानऽ

ओजंसाप्प्रतिंभागन्नदींधिम ॥ १५ ॥ अद्या
दैवाऽउदितासूर्य्यस्यनिरꣳहꣳसःपिपृतानिर
वद्यात् ॥ तन्नोमित्त्रोव्वरुणोमामहन्तामदि
तिःसिन्धुः पृथिवीऽउतद्यौः ॥ १६ ॥ आकृ
ष्णेनरजसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्त्य
ञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुव
नानिपश्यन् ॥ १७ ॥ इति रुद्रे चतुर्थोऽध्यायः ५९

हरिःॐ॥नमस्तेरुद्रमन्यवऽउतोतऽइषवेन
मः॥ बाहुभ्यामुततेनमः॥ १ ॥ यातेरुद्र
शिवातनूरघोरापापकाशिनी ॥ तयानस्त
न्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥२॥
यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे॥शिवा
ङ्गिरित्रताङ्कुरुमाहिᳪसीः पुरुषञ्जगत् ॥३॥
शिवेनवचसात्वागिरिशाच्छावदामसि॥य

थांनऽसर्व्वमिज्जगदयक्ष्मᳩसुमनाऽअसंत्
॥ ४ ॥ अद्ध्यवोचदधिवक्ताप्प्रथमोदैव्योभि
षक् ॥ अहींश्चसर्व्वाञ्जम्भयन्त्सर्व्वाश्चयातु
धान्न्योधराचीःपरांसुव ॥ ५ ॥ असौयस्ता
म्म्रोऽअरुणऽउतबभ्रुःसुमङ्गलः ॥ येचैनᳩ
रुद्राऽअभितोदिक्षुश्श्रिताःसहस्रशोवैषांᳬ
हेडऽईमहे ॥ ६ ॥ असौयोवसर्प्पतिनीलग्ग्रीवो

व्विलोहितः ॥ उतैनंङ्गोपाऽअदृश्श्रन्नदृश्श्रन्नु
दहार्य्यः सदृष्टोमृडयातिनः ॥७॥ नमोस्तु
नीलग्ग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेऽ
अस्यसत्त्वानोहन्तेब्भ्योकरन्नमः ॥८॥ प्रमु
ञ्चधन्न्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्च
तेहस्तऽइषवःपराताभगवोव्वप ॥९॥ व्विज्ज्य
न्धनुःकपर्दिनोव्विशल्योबाणवाँ२ऽउत ॥

अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ।
॥ १० ॥ यातेहेतिर्म्मीढुष्टमहस्तेबभूवतेध
नुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मयापरि
भुज ॥ ११ ॥ परितेधन्वनोहेतिरस्मान्वृण
क्तुविश्वतः ॥ अथोयऽइषुधिस्तवारेऽअस्म
न्निधेहितम् ॥ १२॥ अवतत्यधनुष्ट्वꣳसहस्रा
क्षशतेषुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवो

नेः सुमनाभव ॥ १३ ॥ नमस्तऽआयुधायां
नांततायधृष्णवे ॥ उभाभ्यामुततेनमोबा
हुभ्यान्तवधन्वने ॥ १४ ॥ मानोमहान्तं
मुतमानोऽअर्भकम्मानऽउक्षन्तमुतमानं
ऽउक्षितम् ॥ मानोवधीः पितरम्मोतमातर
म्मानः प्रियास्तन्वोरुद्ररीरिषः ॥ १५ ॥ मा
नस्तोके । तनयेमानऽआयुषिमानोगोषुमा

नोऽअश्वेषुरीरिषः। मानोवीरान्रुद्रभामिनो
वधीर्हविष्मन्तःसदमित्त्वाहवामहे॥१६॥
नमोहिरण्यबाहवे। सेनान्येदिशाञ्चपतयेन
मोनमोवृक्षेभ्योहरिकेशेभ्यःपशूनाम्पत
येनमोनमःशष्पिञ्जरायत्त्विषीमतेपथी
नाम्पतयेनमोनमोहरिकेशायोपवीतिनेपु
ष्टानाम्पतयेनमोनमोबभ्लुशाय ॥१७॥

रुद्रा० नमोबभ्लुशाय। व्याधिनेन्नानाम्पतयेनमो अ०
१६ नमोभवस्यहेत्यैजगताम्पतयेनमोनमोरु ५
द्रायाततायिनेक्षेत्राणाम्पतयेनमोनमःसू
तायाहन्त्यैवनानाम्पतयेनमोनमोरोहिता
य॥१८॥नमोरोहिताय। स्थपतयेवृक्षा
णाम्पतयेनमोनमोभुवन्तयेवारिवस्कृता
यौषधीनाम्पतयेनमोनमोमन्त्रिणेवाणिजा

यकक्षाणाम्पतयेनमोनमऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतयेनमोनमः कृत्स्नायतया॥ १९॥ नमः कृत्स्नायतया। धावते सत्त्वनाम्पतयेनमोनमः सहमानायनिव्याधिनऽआव्याधिनीनाम्पतयेनमोनमोनिषङ्गिणेककुभायस्तेनानाम्पतयेनमोनमोनिचेरवेपरिचरायारण्यानाम्पतयेनमोनमोव

ञ्चते ॥ २० ॥ नमो वञ्चते । परिवञ्चते स्तायूना

म्पतये नमो नमो निषङ्गिणे ऽइषुधिमते तस्क

राणाम्पतये नमो नमः सृकायिभ्यो जिघा

ᳬसद्भ्यो मुष्णताम्पतये नमो नमो ऽसिमद्भ्यो

नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥ २१ ॥

नम ऽउष्णीषिणे । गिरिचराय कुलुञ्चानाम्प

तये नमो नम ऽइषुमद्भ्यो धन्वायिभ्यश्च वो न

मोनमंऽआतन्न्वानेब्भ्यं÷प्प्रतिदधानेब्भ्य
श्चवोनमोनमंऽआयच्छद्भ्योस्यंद्भ्यश्चवोनमो
नमोव्विसृजद्भ्यं÷॥२२॥ नमोव्विसृजद्भ्यो ।
विद्ध्यंद्भ्यश्चवोनमोनमं÷स्वपद्भ्यो जाग्ग्रंद्भ्य
श्चवोनमोनमंःशयानेब्भ्यऽआसीनेब्भ्यश्च
वोनमोनमस्तिष्ठद्भ्योधावंद्भ्यश्चवोनमोनमं
÷सभाब्भ्यं÷॥२३॥ नमं÷सभाब्भ्यं÷।सु

भापतिभ्यश्चवोनमोनमोश्वेभ्योश्वपति
भ्यश्चवोनमोनमऽआव्याधिनींभ्योवि
विद्ध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्य
स्तृꣳहतीभ्यश्चवोनमोनमोगणेभ्यं॥
॥ २४ ॥ नमोगणेभ्यो । गणपतिभ्यश्चवो
नमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमो
नमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोन

मोविरूपेभ्योविश्वरूपेभ्यश्चवोनमोनमु
ःसेनाभ्यः ॥ २५ ॥ नमःसेनाभ्यः । सेना
निभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यं
श्चवोनमोनमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च
वोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवोन
मः ॥ २६ ॥ नमस्तक्षभ्योरथकारेभ्यश्चवो
नमोनमःकुलालेभ्यःकर्म्मारेभ्यश्चवोन

मो नमो॑नि॒षादे॑भ्यः पुञ्जि॒ष्ठेभ्य॑श्च॒वो॒नमो॒
नमः॑ श्व॒निभ्यो॑ मृग॒युभ्य॑श्च॒वो॒नमो॒नमः॑ ॥
श्वभ्यः॑ ॥ २७ ॥ नमः॒ श्वभ्यः॑ । श्वप॑तिभ्य
श्च॒वो॒नमो॒नमो॑ भ॒वाय॑च रु॒द्राय॑च॒नमः॑ श॒
र्वाय॑च पशु॒पत॑ये च॒नमो॒नील॑ग्रीवाय च शि
ति॒कण्ठा॑य च॒नमः॑ कप॒र्दिने॑ ॥ २८ ॥ नमः॑
क॒प॒र्दिने॑ । च॒व्यु॑प्तकेशाय च॒नमः॑ स॒हस्रा॒क्षा

यंचशतधंन्वनेचनमोगिरिशयायंचशिपि
विष्टायंचनमोमीढुष्टमायचेपुमतेचनमो
ह्रस्वायं॥ २९॥ नमोह्रस्वायं। चवामना
यंचनमोबृहतेचवर्षीयसेचनमोवृद्धायंचस
वृधेचनमोग्र्यायचप्रथमायंचनमऽआशवे
॥३०॥ नमऽआशवे। चाजिरायचनमःशी
घ्र्यायचशीभ्यायचनमऊर्म्यायचावस्व

रु० ०
७४

न्यायचनमोनादेयायचद्वीप्याय च ॥ ३१ ॥
नमोज्येष्ठाय । च कनिष्ठायचनमः पूर्वजा
यंचापरजायंचनमोमध्यमायचापगल्भा
यचनमोजघन्यायचबुध्न्यायचनमःसो
भ्याय ॥ ३२ ॥ नमःसोभ्याय । चप्रति
सर्यायचनमोयाम्यायचक्षेम्यायचन
मःश्लोक्यायचावसान्यायचनमऽउर्वर्या

पु०
५
७४

यच॒स्थ॒ल्यांयच॒नमो॒वन्न्या॑य ॥ ३३ ॥ नमो॒
वन्न्या॑य । चक॒क्ष्यांयच॒नम॑ श्र॒वायच॑प्रति
श्र॒वायंच॒नम॑ऽआ॒शुषे॑णायचा॒शुरं॑थायच॒
नम॒ शूरा॑यचावभे॒दिनेच॒नमो॑बि॒ल्मिने॑
॥ ३४ ॥ नमो॑बि॒ल्मिने॑ । चक॒व॒चिने॑च॒नमो॑
व॒र्मिणे॑चव॒रू॒थिने॑च॒नम॑ श्रु॒ताय॑चश्रुतसे॒
नायं॑च॒नमो॑दु॒न्दु॒भ्याय॑चाहन॒न्न्याय॑च॒न॒

मौधृष्णवे॥३५॥नमोधृष्णवे।चप्रमृशाँ
येचनमोनिषङ्गिणेचेषुधिमतेचनमस्तीक्ष्णे
षवेचायुधिनेचनमः स्वायुधायचसुधन्वने
च॥३६॥नमःस्रुत्याय।चपथ्यायचन
मःकाट्यायचनीप्यायचनमःकुल्यायच
सरस्यायचनमोनादेयायचवैशन्तायचन
मःकूप्याय॥३७॥नमःकूप्याय।चाव

ट्यायचनमोवीध्र्यायचातप्यायचनमो
मेघ्यायचविद्युत्यायचनमोवर्ष्यायचाव
र्ष्यायचनमोवात्याय॥ ३८॥ नमोवात्या
य। चरेष्म्यायचनमोवास्तव्यायचवास्तु
पायचनमःसोमायचरुद्रायचनमस्ताम्रा
यचारुणायचनमःशङ्गवे॥३९॥ नमःशङ्ग
वे। चपशुपतयेचनमऽउग्रायचभीमायच

नमोऽग्ग्रेवधायच्चदूरेवधायच्चनमोहन्त्रेचहनीयसेचनमोवृक्षेभ्योहरिकेशेभ्योनमस्तारायं॥४०॥ नमः शम्भवायं। चमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ ४१ ॥ नमः पार्यायं। चावार्यायचनमः प्रतरणायचोत्तरणायचनमस्तीर्थ्यायचकूल्यायचन

म॒ह॒द्रश॒प्प्या॑य च॒ फेन्या॑य च॒ नम॑ः सि॒क॒त्त्या॑य
॥४२॥ नम॑ः सिक॒त्त्या॑य । च॒प्रवा॒ह्या॑य च॒
नम॑ः कि॒ꣳ॒शि॒ला॑य च॒ क्षय॒णाय॑ च॒ नम॑ः कप
र्दि॒नै॑ च॒ पु॒ल॒स्तये॑ च॒ नम॑ऽइरि॒ण्या॑य च॒प्रप
॒थ्या॑य च॒ नमो॑ व्रज्या॑य ॥४३॥ नमो॑ व्रज्या॑
य । च॒ गो॒ष्ठ्या॑य च॒ नम॒स्तल्प्या॑य च॒ गेह्या॑य च॒
नमो॑ हृद॒य्या॑य च॒ नि॒वे॒ष्प्या॑य च॒ नम॑ः काट्या॑

रुद्रा० यचगह्वरेष्ठायचनमः शुष्क्याय ॥ ४४ ॥ न अ०
८० मः शुष्क्याय । चहरित्यायचनमः पांस ५
व्यायचरजस्यायचनमोलोप्यायचोल
प्यायचनमऽऊर्व्यायचसूर्व्यायचनमः प
र्णाय ॥ ४५ ॥ नमः पर्णाय । चपर्णशदायच
नमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखि
दतेचप्रखिदतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यो ८०

८ द्वा०	प०

८१	५

श्वयोनमोनमो॑वः किँरिकेभ्यो॑देवानाहृदं

येभ्योनमो॑विचिन्वत्केभ्योनमो॑विक्षिण

त्केभ्योनमऽआनिर्हतेभ्यः ॥४६॥ द्रापे

ऽअन्धसस्पतेदरिद्रनीलल्लोहित॥आसाम्प्र

जानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनः ।

किञ्चनाममत् ॥४७॥ इमारुद्रायं। तवसेक

पर्दिनेक्षयद्वीरायप्प्रभरामहेमतीः ॥ यथा	८१

शंमसांद्द्विपदेचतुंष्पदेविश्वंम्पुष्टङ्ग्रामेऽअ
स्मिन्ननातुरम् ॥ ४८ ॥ यातेंरुद्रशिवातनूः
शिवाविश्वाहाभेषजी ॥ शिवारुद्रस्यभेषजी
तयांनोमृडजीवसें ॥४९॥ परिणोरुद्रस्यहेति
र्वृणक्तुपरित्वेषस्यंदुर्म्मतिरंघायोः ॥ अव
स्थिरामघवंद्भ्यस्तनुष्वमीढ्वस्तोकायतन
यायमृड ॥५०॥ मीढुंष्टमशिवंतम । शिवो

 

 

नं॑ꣳ सुमना॑ भव। परमेवृक्षऽआयुं धन्निधाय॒कृ
त्तिंव्वसा॑नऽआचरपिना॑कम्बिभ्रुदाग॑हि ॥५१॥
व्विकि॑रिद्र॒ व्विलौहि॑त। नम॑स्तेऽअस्तुभगवः॥
यास्ते॑सहस्त्रꣳहेतयो॒न्यमुस्मन्निव॑पन्तु
ताः ॥५२॥ सहस्त्रा॑णिसहस्र॒शोबाह्वोस्तव॑हे
तयः॑ ॥ तासा॒मीशा॑नो भगवः पराचीना॒मु
खाकृधि ॥५३॥ असंख्यातासहस्त्रा॑णि। ये

 

रुद्राऽअधिभूम्याम् ॥ तेषां सहस्रयोजनेव
धन्वानितन्मसि ॥ ५४ ॥ अस्मिन्महत्यर्ण
वेन्तरिक्षे भवाऽअधि । तेषां सहस्रयोजने
वधन्वानितन्मसि ॥ ५५ ॥ नीलग्रीवाः शि
तिकण्ठादिवं रुद्राऽउपश्रिताः ॥ तेषां
सहस्रयोजनेवधन्वानितन्मसि॥५६॥नील
ग्रीवाःशितिकण्ठाःशर्वाअधःक्षमाचराः ॥

तेषाᳬं सहस्रयोजनेवधन्वानितन्मसि ५७
सेवृक्षेषु । शष्पिञ्जरानीलग्रीवाविलोहि
ताः ॥ तेषाᳬं सहस्रयोजनेवधन्वानितन्म
सि ॥ ५८ ॥ येभूतानामधिपतयोविशिखा
सः कपर्दिनः ॥ तेषाᳬं सहस्रयोजनेवधन्वा
नितन्मसि ॥ ५९ ॥ येपथाम्पथिरक्षयऽऐल
बृदाऽआयुर्युधः । तेषाᳬं सहस्रयोजनेव

धन्वानितन्मसि ॥६०॥ येतीर्थानि। प्रचरं
न्तिसृकाहस्तानिषङ्गिणः॥ तेषांꣳसहस्रयो
जनेवधन्वानितन्मसि ॥६१॥ येन्नेषु। विवि
ध्यन्तिपात्रेषुपिबतोजनान्॥ तेषांꣳसहस्र
योजनेवधन्वानितन्मसि ॥६२॥ यऽएता
वन्तश्चभूयांꣳसश्चदिशोरुद्रावितस्थिरे॥ ते
षांꣳसहस्रयोजनेवधन्वानितन्मसि॥६३॥

नमोऽस्तु । रुद्रेभ्योयेदिवियेषांवर्षमिषवः॥
तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्द
शोदीचीर्दशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनो
वन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वे
ष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥ नमोऽस्तु । रु
द्रेभ्योयेऽन्तरिक्षेयेषांवातऽइषवः ॥ तेभ्यो
दशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदी

चीर्द्दशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तु
तेनोम्मृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमे
षाञ्जम्भेदद्ध्मः ॥६५॥ नमोस्तु। रुद्रेभ्यो
येपृथिव्यांयेषामन्नमिषवः ॥ तेभ्योदशप्प्रा
चीर्द्दशदक्षिणादशप्प्रतीचीर्द्दशोदीचीर्द्दशो
र्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोम्मृ
डयन्तुतेयन्द्विष्मो यश्चनो द्वेष्टितमेषाञ्ज

म्भेदध्मः ॥ ६६ ॥ इति रुद्रे पञ्चमोऽध्यायः ॥
हरिः ॐ ॥ वयꣳसोम व्रते तव मनस्तनूषु बिभ्र
तः ॥ प्रजावन्तꣳसचेमहि ॥ १ ॥ एष ते रुद्र भा
गःसह स्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र
भाग ऽआखुस्ते पशुः ॥ २ ॥ अवरुद्रमदीमह्य

द्रव्येण अभिषेकफलानि—

लिख्यते च यथा द्रव्यमभिषेकात्मकं फलम् ॥ जलेन वृष्टिमाप्नोति व्याधिशान्त्यै कुशोदकैः ॥ १ ॥ दध्ना च पशुकामाय श्रिया इक्षुरसेन च ॥ मध्वाज्येन धनार्थी स्यान्मुमुक्षुस्तीर्थवारिणा ॥ २ ॥ पुत्रार्थी पुत्र

वंदेवन्त्र्यम्बकम् ॥ यथानोवस्यसस्करद्यथा

नःश्रेयसस्करद्यथानोव्यवसाययात् ॥ ३ ॥

भेषजमसि । भेषजङ्गवेश्वायपुरुषायभेषज

म् । सुखम्मेषायमेष्यै ॥ ४ ॥ त्र्यम्बकंय्य

जामहे । सुगन्धिम्पुष्टिवर्द्धनम् । उर्वारु

माप्नोति पयसां चाभिषेचनात् ॥ वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याऽङ्गना ॥ ३ ॥ सद्यः पुत्रमवाप्नोति पयसा चाभिषेचनात् ॥ अन्यच्च—ज्वरप्रकोपशान्त्यर्थं जलधारा शिवप्रिया ॥ ४ ॥ घृतधारा शिवे कार्या यावन्मन्त्रसहस्रकम् ॥ तदा वंशस्य विस्तारो जायते नात्र

कमि॑व॒बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒माऽमृता॑त् । त्र्य॑म्बकंयजामहे सु॒गन्धि॑म्पति॒वेद॑नम् । उ॒र्वा॒रु॒कमि॑व॒बन्ध॑नादि॒तोमु॑क्षीय॒मामु॒तः ॥५॥ ए॒तत्ते॑ । रु॒द्रा॒व॒सन्तेन॒परो॒मू॒ज॑वतो॒ऽती॑हि ॥ अव॑ततधन्वा॒पिना॑कावसः॒कृत्ति॑वासा

संशयः ॥ ५ ॥ प्रमेहरोगशान्त्यर्थं प्राप्नुयान्मानसेप्सितम् ॥ केवलं दुग्धधारा च तदा कार्या विशेषतः ॥ ६ ॥ शर्करामिश्रिता तत्र यदा बुद्धिर्जडा भवेत् ॥ श्रेष्ठा बुद्धिर्भवेत्तस्य कृपया शङ्करस्य च ॥ ७ ॥ सार्षपेणैव तैलेन शत्रुनाशो भवेदिह ॥ मधुना यक्ष्मराजोऽपि गच्छेद्वै

ऽअहिᳬसन्नःशिवोतीँहि ॥६॥ त्र्यायुषञ्जमँ
दग्नेःकश्यपस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुष
न्तन्नोऽअस्तुत्र्यायुषम् ॥ ७॥ शिवोनामा
सिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिᳬ

शिवपूजनात् ॥ ८ ॥ पापक्षयार्थी मधुना निर्व्याधिः सर्पिषा तथा ॥
जीवनार्थी तु पयसा श्रीकामीक्षुरसेन वै ॥ ९ ॥ पुत्रार्थी शर्करायास्तु
रसेनार्चेच्छिवं तथा ॥ महालिङ्गाभिषेकेण सुप्रीतः शङ्करो मुदा ॥ १० ॥
कुर्याद्विधानं रुद्राणां यजुर्वेदविनिर्मितम् ॥ अन्यच्च—यजुर्मयो ह्ययं देवो
यजुर्भिः शतरुद्रियैः ॥ पूजनीयो महारुद्रः सन्ततिश्रेयइच्छता ॥ ११ ॥

सीः ॥ निवर्त्तयाम्म्यायुषेन्नाद्यायप्रजननाय

रायस्पोषायसुप्रजास्त्वायसुवीर्य्याय

॥ ८ ॥ इति रुद्रे षष्ठोऽध्यायः ॥ ६ ॥

हरिः ॐ ॥ उग्रश्च । भीमश्च ध्वान्तश्च धुनिश्च ।

सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा । १ । अ

ग्निᳬं हृदयेनाशनिᳬं हृदयाग्रेणपशुपतिङ्कृ

त्स्नहृदयेनभवंय्यक्ना ॥ शर्वम्मतस्नाभ्या

रुद्रा० मीशांनम्मन्युनांमहादेवंमन्तःपर्शव्येनो अ०
६४ ग्रन्देवंव्वंनिष्ठुनांव्वसिष्ठहनुःशिङ्गीनिको ७
श्याब्भ्यांम् ॥ २ ॥ उग्ग्रँल्लोहितेन । मित्रꣳ
सौव्व्रत्त्येनरुद्द्रन्दौव्व्रत्त्येनेन्द्रंम्प्रक्क्रीडेनमरु
तोबलेनसाद्ध्यान्प्प्रमुदा । भवस्यकण्ठ्यꣳरु
द्द्रस्यान्तःपार्श्व्यम्मंहादेवस्ययकृच्छर्व्वस्यव्व
निष्ठुःपशुपतेःपुरीतत् ॥ ३ ॥ लोमभ्यःस्वा ६४

रुद्रा० हाँ। लोमभ्यःस्वाहा त्वचेस्वाहा त्वचेस्वाहा अ०
९५ लोहितायस्वाहा लोहितायस्वाहा मेदोभ्यः ७
स्वाहा मेदोभ्यःस्वाहा माꣳसेभ्यःस्वाहा
माꣳसेभ्यःस्वाहा स्नावभ्यःस्वाहा स्नाव
भ्यःस्वाहा ऽस्थभ्यःस्वाहा ऽस्थभ्यःस्वा
हा मज्जभ्यःस्वाहा मज्जभ्यःस्वाहा ॥ रेत
सेस्वाहा पायवेस्वाहा ॥ ४ ॥ आयासायस्वा ९५

हा । प्प्रायासायस्वाहासंप्र्यासायस्वाहावि
यासायस्वाहोद्यासायस्वाहा॥शुचेस्वाहाशो
चतेस्वाहाशोचमानायस्वाहाशोकायस्वा
हा॥५॥तपसेस्वाहा।तप्प्यतेस्वाहातप्प्यमा
नायस्वाहातप्तायस्वाहाघर्म्मायस्वाहा॥नि
ष्कृत्यैस्वाहाप्प्रायश्चित्त्यैस्वाहाभेषजाय
स्वाहा ॥ ६ ॥ यमायस्वाहान्तकायस्वाहाम्

त्यवेस्वाहा ॥ ब्रह्मणेस्वाहाब्रह्महत्यायैस्वा
हाविश्वेभ्योदेवेभ्यःस्वाहाद्यावापृथिवी
भ्याᳬस्वाहा ॥७॥ इति रुद्रे सप्तमोऽध्यायः
हरिःॐ ॥ वाजश्च । मेप्रसवश्चमेप्रयतिश्चमे
प्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लो
कश्चमेश्रवश्चमेश्रुतिश्चमेज्योतिश्चमे
स्वश्चमेयज्ञेनकल्पन्ताम् ॥ १ ॥ प्राणश्च । मेपा

नश्चमेव्यानश्चमेसुश्चमेचित्तञ्चमऽआधीत
ञ्चमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रञ्चमे
दक्षश्चमेबलञ्चमेयज्ञेनकल्पन्ताम्॥२॥ओ
जश्च । मेसहश्चमऽआत्माचमेतनूश्चमेश
र्मचमेवर्मचमेङ्गानिचमेस्थीनिचमेपरू
ंषिचमेशरीराणिचमऽआयुश्चमेजराचमे
यज्ञेनकल्पन्ताम्॥३॥ज्यैष्ठ्यञ्च । मऽआ

धिपत्यञ्चमे मन्युश्चमेभामश्च मेमश्चमे
म्भश्चमेजेमाचमेमहिमाचमे मेवरिमाचमे
प्रथिमाचमेवर्षिमाचमेद्राघिमाचमेवृद्ध
ञ्चमेवृद्धिश्चमेयज्ञेनकल्पन्ताम् ॥४॥ (न०)
सत्यञ्च। मेश्रद्धाचमेजगच्चमेधनञ्चमेविश्व
ञ्चमेमहश्च मेक्रीडाचमेमोदश्चमेजातञ्चमे
जनिष्यमाणञ्चमेसूक्तञ्चमेसुकृतञ्चमेयज्ञे ११

नेकल्पन्ताम् ॥५॥ ऋतञ्च मेऽमृतञ्च मे यक्ष्म
ञ्च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मे
नमित्रञ्च मेऽभयञ्च मे सुखञ्च मे शयनञ्च मे सू
षाश्च मे सुदिनञ्च मे यज्ञेन कल्पन्ताम् ॥६॥ य
न्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्व
ञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसू
श्च मे सीरञ्च मे लयश्च मे यज्ञेन कल्पन्ताम् ७

शञ्चमेमयंश्चमेऽप्रियञ्चमेनुकामश्चमेकाम
श्चमेसौमनसश्चमेभगंश्चमेद्रविणञ्चमेभद्र
ञ्चमेश्रेयंश्चमेवसीयश्चमेयशश्चमेसञ्ज्ञेनक
ल्प्पन्ताम् ॥८॥(न०)॥ ऊर्क्चं। मे सूनृतांच
मेपयंश्चमेरसंश्चमेघृतञ्चमेमधुंचमेसाग्धिंश्च
मेसपीतिश्चमेकृषिश्चमेवृष्टिंश्चमेजैत्रञ्चमऽ
औद्भिद्यञ्चमेसञ्ज्ञेनकल्प्पन्ताम् ॥९॥ रयि

रुद्रा० श्चं। मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभु च मे प्र अ०
१०२ भु च मे पूर्णञ्च मे पूर्णतरञ्च मे कुयवञ्च मोक्षित ८
ञ्च मेन्नञ्च मेक्षुच्च मे यज्ञेन कल्पन्ताम् ॥ १० ॥
वित्तञ्च। मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सु
गञ्च मे सुपथ्यञ्च मऽऋद्धञ्च मऽऋद्धिश्च मे क्लृ
प्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन
कल्पन्ताम् ॥ ११ ॥ व्रीहयश्च। मे यवाश्च मे १०२

माँषाश्श्चमेतिलाश्श्चमेमुद्गाश्श्चमेखल्वाश्श्चमे
प्रियङ्गवश्श्चमेणवश्श्चमेश्यामाकाश्श्चमेनीवा
राश्श्चमेगोधूमाश्श्चमेमसूराश्श्चमेयज्ञेनकल्प
न्ताम्॥ १२॥ (न०)॥ अश्माँच। मेमृत्ति
काचमेगिरयश्श्चमेपर्व्वताश्श्चमेसिकताश्श्चमेव
नस्पतयश्श्चमेहिरण्यञ्चमेयश्श्चमेश्यामञ्चमे
लोहञ्चमेसीसञ्चमेत्रपुचमेयज्ञेनकल्पन्ता

म्॥१३॥ अग्निश्च॑ । मु ऽआप॑श्च मेवी॒रुध॑श्च म
ऽओष॑धयश्च मे कृष्टप॒च्याश्च॑ मे कृष्टप॒च्याश्च॑
मे ग्राम्म्याश्च॑ मे पु॒शव॑ऽआर॒ण्याश्च॑ मे वि॒त्त
ञ्च॑ मे॒ वित्ति॑श्च मे भूतञ्च॑ मे॒ भूति॑श्च मे यु॒ज्ञेन॑ क
ल्प्पन्ताम्॥१४॥ वसु॑ च । मे वसा॒तिश्च॑ मे॒ कर्म्म॑
च मे॒ शक्ति॑श्च मे र्थ॑श्च मु ऽएम॑श्च म ऽइ॒त्या च॑ मे॒
गति॑श्च मे यु॒ज्ञेन॑ कल्प्पन्ताम्॥१५॥ (न०)॥

अग्निश्च। मेऽइन्द्रश्चमेसोमश्चमऽइन्द्रश्चमे
सविताचमऽइन्द्रश्चमेसरस्वतीचमऽइन्द्रश्च
मेपूषाचमऽइन्द्रश्चमेबृहस्पतिश्चमऽ
इन्द्रश्चमेयज्ञेनकल्पताम् ॥१६॥ मित्रश्च।
मऽइन्द्रश्चमेवरुणश्चमऽइन्द्रश्चमेधाताच
मऽइन्द्रश्चमेत्वष्टाचमऽइन्द्रश्चमेमरुतश्च
मऽइन्द्रश्चमेविश्वेचमेदेवाऽइन्द्रश्चमेयज्ञे

नंकल्पन्ताम् ॥ १७ ॥ पृथिवीच । मऽइन्द्र
श्चमेन्तरिक्षञ्चमऽइन्द्रं श्चमेद्यौ श्चमऽइन्द्र
श्चमेसमां श्चमऽइन्द्रं श्चमेनक्षत्राणिचमऽइ
न्द्र श्चमेदिश श्चमऽइन्द्रं श्चमेयज्ञेनंकल्प
न्ताम् ॥ १८ ॥ (न०) ॥ अꣳशुश्च । मेरश्मिश्च
श्चमेदाभ्य श्चमेधिपति श्चमऽउपाꣳशुश्च
मेन्तर्य्यामश्चमऽऐन्द्रवायव श्चमेमैत्रावरु

णश्च मे ऽआश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ॥ १९ ॥

आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऽऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥ २० ॥ स्रुचश्च मे चम

साश्चमेवायव्यानिचमेद्रोणकलशश्चमे
ग्रावाणश्चमेधिषवणेचमेपूतभृच्चमऽआध
वनीयश्चमेवेदिश्चमेबर्हिश्चमेवभृथश्चमेस्व
गाकारश्चमेयज्ञेनकल्पन्ताम् २१ (न०)॥
अग्निश्च । मेघर्म्मश्चमेर्कश्चमेसूर्यश्चमेप्रा
णश्चमेश्वमेधश्चमेपृथिवीचमेदितिश्चमेदि
तिश्चमेद्यौश्चमेङ्गुलयःशक्वरयोदिशश्चमे

यज्ञेन कल्पन्ताम् ॥ २२ ॥ व्रतञ्च । मऽऋतव
श्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रेऽऊर्वष्ठीवे
बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥ २३ ॥
(न०)॥ एका च । मे तिस्रश्च मे तिस्रश्च मे पञ्च
च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव
च मऽएकादश च मऽएकादश च मे त्रयोदश
च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे १०९

सुप्तदँशचमेसुप्तदँशचमेनवँदँ
शचमुऽएकँविठँ शतिश्चमुऽएकँविठँ शति
श्चमेत्रयोँविठँ शतिश्चमेत्रयोँविठँ शतिश्च
मेपञ्चँविठँ शतिश्चमपञ्चँविठँ शतिश्चमेसुप्त
विँठँ शतिश्चमेसुप्तविँठँ शतिश्चमेनवँविठँ श
तिश्चमेनवँविठँ शतिश्चमुऽएकँत्रिठँ शच्चमु
ऽएकँत्रिठँ शच्चमेत्रयँस्त्रिठँ शच्चमेषुड्रोनेक

ल्पन्ताम् ॥ २४ ॥ (न०) ॥ चतस्रश्च । मेऽष्टौ
चमेऽष्टौचमेद्वादशचमेद्वादशचमेषोडशच
मेषोडशचमेविꣳ॒शतिश्चमेविꣳ॒शतिश्चमे
चतुर्विꣳ॒शतिश्चमेचतुर्विꣳ॒शतिश्चमेऽष्टावि
ꣳ॒शतिश्चमेऽष्टाविꣳ॒शतिश्चमेद्वात्रिꣳ॒शच्चमे
द्वात्रिꣳ॒शच्चमेषट्त्रिꣳ॒शच्चमेषट्त्रिꣳ॒शच्चमे
चत्वारिꣳ॒शच्चमेचत्वारिꣳ॒शच्चमेचतुश्च

रुद्रा० त्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमेष्टाचंत्वा य०
११२ रिꣳशच्चमेयज्ञेनंकल्पन्ताम्॥२५॥(न०)।
त्र्यविश्च।मेत्र्यवीचंमेदित्यवाट्चंमेदित्यौ
हीचंमेपञ्चाविश्चमेपञ्चावीचंमेत्रिवत्सश्चमे
त्रिवत्साचंमेतुर्यवाट्चंमेतुर्यौहीचंमेयज्ञे
नंकल्पन्ताम्॥२६॥पष्ठवाट्चं।मेपष्ठौहीच
मऽउक्षाचंमेवशाचंमऽऋषभश्चंमेवेहच्चमे। ११२

नड्वाँश्चमेधेनुश्चमेयज्ञेनंकल्पन्ताम्॥२७॥
(न०)॥ वाजायस्वाहा । प्रसवायस्वाहापि
जायस्वाहाक्रतवेस्वाहावसवेस्वाहाहर्पतये
स्वाहाह्नेमुग्धायस्वाहामुग्धायवैनꣳशि
नायस्वाहाविनꣳशिनऽआन्त्यायनायस्वा
हान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वा
हाधिपतयेस्वाहाप्रजापतयेस्वाहा॥ इयन्ते

राणिम्मित्रायैसन्तासिसमनऽऊर्जैत्वाबृहच्यै
त्वाप्प्रजानान्त्वाधिपत्याय॥२८॥आयुर्य्यं
ज्ञेनं। कल्पतांप्प्राणोयज्ञेनकल्पतांञ्चक्षु
र्य्यज्ञेनकल्पताᳫं श्रोत्रंयज्ञेनकल्पता
व्वाग्यज्ञेनकल्पताम्मनोयज्ञेनकल्पता
मात्मायज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्प
ताञ्ज्योतिर्य्यज्ञेनकल्पताᳫं स्वर्य्यज्ञेनक

ल्पतास्पृष्ठंऽस्य ज्ञेनंकल्पतांयज्ञोस्य ज्ञेनंक
ल्पताम् ॥ स्तोमंश्चयजुश्च ऽऋक्चसामंच
बृहच्चंरथन्तरञ्च । स्वंर्देवाऽअगन्मामृताऽअ
भूमप्प्रजापतेः प्प्रजाऽअंभूमवेट्स्वाहा २९
इति रुद्रेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥
॥ हरिः ॐ ॥ ऋचंवाचम्प्रपंद्येमनोयजुः प्प्रप
द्येसामंप्प्राणम्प्रपंद्येचक्षुःश्श्रोत्रंप्रपंद्ये ॥ वागो

जं॑ ÷ सहौजो॒मयिं॑प्राणापा॒नौ ॥ १ ॥ यन्मे॑छि॒
द्रञ्चक्षु॑षो॒हृद॑यस्य॒मन॑सो॒वातितृ॒णम्बृह॒स्प
ति॑र्मे॒तद्द॑धातु ॥ शन्नो॑भवतु॒भुव॑नस्य॒यस्प
तिः ॥ २ ॥ भूर्भुवः॒स्व ÷ । तत्स॑वितु॒र्वरे॑ण्यम्भ
र्गो॑दे॒वस्य॑धीमहि ॥ धियो॒योनः॑ ÷ प्रचो॒दया॑त्
॥ ३ ॥ कया॑नश्चि॒त्रऽआभु॑वदू॒तीसदा॒वृ॑धः॒स
खा॑ । कया॒शचि॑ष्ठया॒वृ॒ता ॥ ४ ॥ कस्त्वा॑ । स॒त्यो

मद्दोनास्म ६ हिष्ठोमत्सुदन्धंसः॥ दृढाचिंदा
रुजेव्वसु ॥५॥ अभीषुणः सखीनामविताजं
रितॄणाम् ॥ शतम्भंवास्यूतिभिः॥६॥ कया
त्वन्नंऽऊत्याभिप्प्रमंन्दसेवृषन्॥ कयांस्तोतृ
भ्यऽआभंर॥७॥ इन्द्रोविश्वंस्यराजति॥ श
न्नोंऽअस्तुद्विपदेशञ्चतुंष्पदे॥ ८॥ शन्नोंमि
त्रः शंवरुणः शन्नोंभवत्वर्य्यमा॥ शन्नऽइन्द्रो

॥११॥ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीत
ये॥ शंय्योरभिस्रवन्तुनः॥ १२॥ स्योनापृ
थिवि। नोभवानृक्षरानिवेशनी॥ यच्छानः
शर्म्मसप्रथाः॥१३॥ आपोहि। ष्ठामयोभुव
स्तानऽऊर्जेदधातन॥ महेरणायचक्षसे १४
योवः शिवतमोरसस्तस्यभाजयतेहनः॥ उ
शतीरिवमातरः॥१५॥ तस्माऽअरंङ्गमाम ११९

वोयस्यक्षयायजिन्वथ ॥ आपोजनयथाच
नः॥१६॥द्यौःशान्तिरन्तरिक्षꣳशान्तिःपृ
थिवीशान्तिरापःशान्तिरोषधयःशान्तिः॥
वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्म
शान्तिःसर्वꣳशान्तिःशान्तिरेवशान्तिः
सामाशान्तिरेधि॥१७॥ दृतेदृꣳहमामित्र
स्यमाचक्षुषासर्वाणिभूतानिसमीक्षन्ताम्॥

मित्रस्याहञ्चक्षुषासर्वाणिभूतानिसमीक्षे ॥
मित्रस्यचक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृꣳह
मा ॥ ज्योक्तेसन्दृशिजीव्यासञ्ज्योक्तेसन्दृ
शिजीव्यासम् ॥ १९ ॥ नमस्तेहरसेशोचिषेन
मस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तप
न्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव
॥ २० ॥ नमस्ते । अस्तुविद्युतेनमस्तेस्तनयि

तवे ॥ नमस्तेभगवन्नस्तुयतः स्वःसमीहसे
॥२१॥ यतोयतःसमीहसेततोनोऽअभयङ्कु
रु ॥ शन्नः कुरुप्प्रजाभ्योभयन्नः पशुभ्यः
॥२२॥ सुमित्त्रियानऽआपऽओषधयःसन्तु
दुर्म्मित्त्रियास्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्च
वयन्द्विष्म्मः ॥२३॥ तच्चक्षुर्देवहितम्पुरस्ता
च्छुक्क्रमुच्चरत् ॥ पश्येमशरदःशतञ्जीवेमश

 रदं÷शतꣳशृणुयामशरदं÷शतम्प्रब्रवामश 
 रदं÷शतमदीनाꣳस्यामशरदं÷शतम्भूयंश्च 
शरदं÷शतात् ।२४। इति रुद्रे शान्त्यध्यायः
अथरुद्रेस्वस्तिप्रार्थनामन्त्राऽध्यायः ॥ हरिः
ॐ। स्वस्तिनऽइन्द्रोवृद्धश्श्रवाꣳस्वस्तिनं÷पू
षाविश्ववेदाꣳ ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टने
मिꣳस्वस्तिनोबृहस्पतिर्दधातु॥१॥ॐपयं÷ 

पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षे
पयोधाः। पयस्वतीःप्प्रदिशःसन्तुमह्यम् २
ॐ व्विष्णोरराटमसिव्विष्णोःश्नप्त्रेस्थोव्वि
ष्णोःस्यूरसिव्विष्णोर्ध्रुवोसि॥ व्वैष्णवम
सिव्विष्णवेत्वा॥३॥ ॐ अग्निर्देवताव्वातोदेव
तासूर्य्योदेवताचन्द्रमादेवताव्वसवोदेवता
रुद्रादेवतादित्यादेवतामरुतोदेवताव्विश्वेदे १२४

वादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदे
वता ४ ॐसद्योजातंप्रपद्यामिसद्योजाताय
वैनमोनमः॥ भवेभवेनातिभवेभवस्वमांभ
वोद्भवायनमः॥५॥ वामदेवायनमोज्येष्ठा
यनमः श्रेष्ठायनमोरुद्रायनमः कालायनमः
कलविकरणायनमोबलविकरणायनमोब
लायनमोबलप्रमथनायनमः सर्वभूतदमना

थ्नमोऽस्मनोन्मनायनमः ६ अघोरेभ्योथघो
रेभ्योघोरघोरतरेभ्यः॥सर्वेभ्यःसर्वशर्वेभ्योन
मस्तेअस्तुरुद्ररूपेभ्यः॥७॥ तत्पुरुषायविद्म
हेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात्
॥८॥ईशानःसर्वविद्यानामीश्वरःसर्वभूताना
म्॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमे
अस्तुसदाशिवोम्॥९॥ ॐशिवोनामासिस्व

धितिस्तेपितानमस्तेऽअस्तुमामाहिᳬसीः॥
निर्वर्त्तयाम्म्यायुषेन्नाद्यायप्रजननायराय
स्पोषायसुप्रजास्त्वायसुवीर्य्याय॥१०॥ॐ
व्विश्वानिदेवसवितर्दुरितानिपरासुव।यद्भद्र
न्तन्नऽआसुव ॥११॥ ॐद्यौःशान्तिरन्तरि
क्षᳬशान्तिः पृथिवीशान्तिरापःशान्तिरो
षधयःशान्तिः।व्वनस्पतयःशान्तिर्व्विश्वे

देवाꣳशान्तिर्ब्रह्मशान्तिꣳसर्व्वꣳशान्तिꣳशा
न्तिरेवशान्तिꣳसामाशान्तिरेधि ॥ १२॥ ॐ
सर्व्वेषांवाएषव्वेदानाꣳरसोयत्सामसर्वेषामे
वैनमेतद्वेदानाꣳरसेनाभिषिञ्चति ॥ १३ ॥

इतिस्वस्तिप्रार्थनामंत्राऽध्यायः ॥ ॐशान्तिः शान्तिःसु
शान्तिर्भवतु ॥ सर्वारिष्टशान्तिर्भवतु ॥ अनेन रुद्राभिषेककर्मणा कृतेन श्रीभवानीशङ्करमहारुद्रः प्रीयतां न मम ॥
॥ ॐसदाशिवार्पणमस्तु ॥ ॥ ॥